वाच्यः, अतो ज्ञानात् कर्मक्षयस्थलेऽपि तच्छास्त्रं संकोच्यतां वेदबोधितानाशकानाशस्यैव कर्मणो भोगैकनाश्यत्वात्, प्रायश्चित्तज्ञानयोश्च वेदेनैव नाशकत्वं बोधितमिति—वाच्यम्; प्रायश्चित्तादावनन्यगतिकत्वेन तथा कल्पनात्। नहि प्रायश्चित्ते कर्मान्तराधिकारः फलम्; सर्वत्रापि पापे कर्मानधिकाराभावात्; प्राणान्तिके तदसंभवाच्च, ज्ञानस्थाने तु भोगद्वारेणापि क्षयसंभवे संकोचो न युक्तः। नच—तत्र ज्ञानं विनापि भोगात्कर्मनाशदर्शनात् व्यभिचारात् कथं तत्त्वज्ञानस्य कारणतेति—वाच्यम्; कर्मप्रागभावासहवृत्तिकर्मनाशे युगपद्भोगे चाव्यभिचारात्। नच—तत्त्वज्ञानवतां भोगार्थं प्रवृत्तौ हि विहितनिषिद्धाचरणसंभवेन धर्माधर्मोत्पत्तौ मोक्ष एव न स्यादिति—वाच्यम्; दोषाभावेन तयोरुत्पत्त्यसंभवादिति, अत्रोच्यते—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" इत्यादिभिः श्रुतिभिः हृदयग्रन्थ्यादिनाशे ज्ञानहेतुत्वं प्रतिपाद्यते। तत्र यदि कर्मनाशे भोगो द्वारं कल्प्यतेऽल्पमपि तदा हृदयग्रन्थ्यादिनाशे जनयितव्ये द्वारं कल्पयितव्यं स्यात्, तथाच यथा द्वारमन्तरेणैव तत्त्वज्ञानमात्रादेव हृदयग्रन्थ्यादेर्नाशः, तथाच बाध्यबाधकभाव एव, पदहोमाऽऽहवनीयहोमयोरिव अग्नीषोमीयहिंसाऽहिंसयोरिवेति। नच—अबाधेनाप्युपपत्तौ बाधकल्पनमनुचितमिति—वाच्यम्; भोगेन क्षयाभ्युपगमे ज्ञानवैयर्थ्यापत्तेः। किंच यावदेव स्मृत्या श्रुतिः कल्प्यते तावदेव प्रत्यक्षश्रुत्या ज्ञानस्य साधनत्वं बोध्यते। तच्च साक्षादेव, तस्मिन् बाधके सत्येव परंपरात्वस्य कल्पनात्। तदनन्तरं कल्पिताऽपि श्रुतिस्तदितरविषयाऽवतिष्ठते। तत्वज्ञानिविषयत्वे तु साक्षाच्छ्रुतिविरोधेऽनुमानमेव न स्यात्। तदुक्तं—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति। श्रुतिश्च "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे"त्यादिर्यदैव ज्ञानं तदैव ब्रह्मभावमाह; हेतौ शतुः स्मरणात् 'भुञ्जानस्तृप्यति' इतिवत्। अविद्यानाशानन्तरमेवाऽविद्याकृतस्याब्रह्मत्वस्य निवृत्तेः, उपादाननाशादुपादेयनाशस्य सर्वत्र दर्शनात्। यथाच कारणनाशानन्तरं कार्यं निरधिकरणं क्षणमात्रं तिष्ठति, तथा बलवत्प्रतिबन्धवशादनेकक्षणमपि स्थास्यति। तथाच श्रुतिः—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति प्रारब्धकर्मफलभोगपर्यन्तं नष्टाविद्यस्यापि स्थूलसूक्ष्मशरीरयोः सद्भावं दर्शयति। प्रारब्धकर्मभोगश्च क्वचिदेकेनैव शरीरेण, क्वचिन्नानाशरीरैः। तत्राऽऽद्यमिदानींतनानाम्, द्वितीयं तु महानुभावानां वसिष्ठादीनाम्। अत्र सूत्रं—"यावदधिकारमवस्थितिराधिकारिकाणाम्" इति। भगवदाज्ञापालनौपयिकं बलवत्सुकृतं कर्माऽधिकारस्तत्समाप्तिपर्यन्तमाधिकारिकाणां सूर्यादीनां वसिष्ठादीनां च शरीरग्रहणप्रवाहावस्थितिरित्यर्थः। एकशरीरभोग्यस्येवानेकशरीरभोग्यस्य प्रारब्धस्य कर्मणः संभवात्। एतादृशानां च योगीश्वराणां योगप्रभावात् स्त एव स्वेच्छया कायबाहुल्यतदुपसंहारौ। अत्र सूत्रं—"प्रदीपवदावेशस्तथाहि दर्शयति"। एवं सगुणविद्याविदामपि योगीश्वराणाम्। निर्गुणविद्याविदां त्वनधिकारिणां वर्तमानदेहभावे जीवन्मुक्तिस्तदभावे च विदेहमुक्तिः। तत्र ज्ञानात् कर्मक्षयप्रतिपादके सूत्रे "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" "इतरस्याप्येवमसंश्लेषः पाते तु" इतरस्य सुकृतस्येत्यर्थः, तस्मात् ज्ञानिनः कर्मभोगार्थमयोगिनोऽपि कायव्यूहकल्पनं मौढ्यमात्रेणैव। ज्ञानस्य प्रारब्धकर्मानाशकत्वे सूत्रं "भोगेन त्वितरे क्षपयित्वा संपद्यते" इति प्रागेवोदाहृतम्॥

अद्वैतरत्नमेतत्तु श्रीविश्वेश्वरपादयोः। समर्पितमथैतेन प्रीयतां स दयानिधिः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपूज्यपादशिष्यश्रीमधुसूदनसरस्वतीविरचितमद्वैतरत्नरक्षणं समाप्तम्॥

शुभं भवतु॥